विहुडणश्ररीगहवश्च्घुआणयवच्छिहिइ ॥१२९॥ आलिङ्ग-नादिग्लहादुरोदरादिक्रीडाद्यूतानियथा। आश्लेषेप्रथमक्रमेणविजितेहृष्टाधरस्यार्पणेकेलीद्यूतविधौपणम्प्रियतमेकान्ताम्पुनः पृच्छति। सान्तर्हासनिरुद्धसम्भृतरसोद्भेदस्फुरद्गण्डयातूष्णींशारिविसारणायनिहितःस्वेदाम्बुगर्भः करः॥१३०॥ रागोद्दीपनायमाध्वीकादिसेवामधुपानं यथा। थोआरूढमहुमआखणपह्लट्ठावराहदिण्णुल्लावा। हसिऊणसण्ठविज्जइपिएणसम्भरिअलज्जिआक्काविपिआ ॥ १३१ ॥ प्रेमप्रकारेषुविप्रियादिभिरप्यविनाशनीयोनित्योयथा। दिट्ठाकुविआणुणआपिआसहस्सजणपेल्लणम्मिविसहिआम्। जस्सणिसग्गहुउरेसिरीअपेम्मेणलहुअह्नओअप्पाणो ॥ १३२ ॥ तपश्चरणादिजन्मानैमित्तिकोयथा। एयेषसाकर्तुंमनर्घ्यरूपतांसमाधिमास्थायतपोभिरात्मनः। अवाप्यतेवाकथमन्यथाद्वयन्तथाविधम्प्रेमपतिश्चतादृशः ॥ १३३ ॥ अनिर्द्धारितविशेषः सामान्योयथा। कुविआओपसण्णमुहीओविसमाणीओ। जहगहिआलहहिअअन्धोरेतिअणिव्वुअम्बाला ॥१३४॥ निर्द्धारितविशेषप्रकारोविशेषवान्यथा। णवित्तहअणालवन्तीहिअअन्दुम्मेइमाणिईणीअहिअम्। जहदूरविअभिअगरुअरोसमज्झत्थभणिषेण ॥१३५॥ इङ्गितादिभिरप्यनवगम्यः प्रच्छन्नोयथा। दिअहेदिअहेरूसङ्कअभमङ्गवड्ढिआसङ्का। आवण्डुरोवणमुहीकलमेणसमङ्कलमगोवी ॥१३६॥ सख्यादि-

भिरवगतः प्रकाशो यथा। जह्वहो सिणतस्स पिआ तादी अह
णीसहेहि अङ्गेहि। णवसुअ पिअपंक समल्लपाडिव्वकिंसु-
असि॥ १३७॥ कारणोपाधिकः कृत्रिमो यथा। अहुं सणे
णपुत्तअसुठ्ठु विणेहाणुबन्धगहिआइ। हत्थउक्कपाणि-
आइं विकालणवाल्लन्तिपेम्माइम् ॥१३८॥ कारणनिरपेक्षो
ऽकृत्रिमो यथा। जह जह जरापरिणओ होइ पई दुग्गओ वि
रूवो वि। कुलपालिआए तह तह अहिअअरं वल्लहो होइ॥ १३९
जन्मान्तरसंस्कारजनितः सहजो यथा। आणिअपुलओ
भेओ सवत्तिपणअपरिधूसरम्मि विगरुए। पिअदंसणे प
वड्ढइ मन्नठ्ठाणे विरुम्मिणीअ पहरिसो॥ १४०॥ उपचा
रापेक्षप्रकर्ष आहार्यो यथा। घरिणीअ कइस्सव्वञ्जुलप्पि
अअमे कुणन्तस्मि। अक्कअत्थाइं विजाआइं नहत्ति सिढि-
लिआइं अङ्गाइम्॥ १४१॥ यौवनजो यथा। तम्बमुहक-
आहोआ जहथणआ किलेन्ति कुमारीणम्। तह तह लद्धा-
वासो व्व वम्महो हिअअमाविसइ॥१४२॥ उपचारानपेक्षो
विस्त्रम्भजो यथा। णवि तह छेअरआइं हरन्ति पुणरुत्तरा
अरमिआइम्। जह जत्थ व तत्थ व जह व तह व सब्भाव र-
मिआइम्॥१४३॥ प्रेमपुष्टिषु चक्षुःप्रीतिर्यथा। उत्पत्तिर्दे
वयजनाद्ब्रह्मवादी नृपः पिता। सुप्रसन्नोज्ज्वला मूर्त्ति-
रस्याः स्नेहं करोति मे॥१४४॥ मनः सङ्गो यथा। एषा मनो
मे प्रसभं शरीरात्पितुः पदं मध्यममुत्पतन्ती। सुराङ्गना-
कर्षति खण्डिताग्रात्सूत्रं मृणालादिव राजहंसी॥१४५॥
सङ्कल्पोत्पत्तिर्यथा। तस्सुल्लअ ...पिपेक्खइ तब्भागि-

उक्का अइइ तीअ गेण्हइ गोत्तम् । ठाइ अतस्स समअणे अपण
म्मि पवि चिन्तअम्मि सङ्खिअ हिअए ॥ १४६ ॥ प्रलापो यथा ।
अम अम अगअणसेहर रअणीमुहतिलअ चन्द दे छिवसु ।
छित्तो जेहिं पिअअमो ममम्मि तेहिं चिअ करेहिम् ॥ १४७ ॥
जागरो यथा । तुह विरहुज्जागरिओ सिविणेवि सदेइ दंसण
सुहाइ । बाहेण जहा छोअणविलोअणम्मि से विहअम् ॥१४८॥
कार्श्यं यथा । आइ कोवणा वि सासूरुआवि आग अवई-
एसोह्णाए । पाअपडणोणआए दोसु विगलिएसु वलएसु
॥१४९॥ अरतिर्विषयान्तरे यथा । असमत्तो विसमप्पइअ-
परिअग्गहि अलहुओ परगुणालाओ । तस्स पिआ पडिव
ह्वाण समप्पइ स्सुहा समत्ता विकहा लज्ज ॥ १५० ॥ विस-
र्जनं यथा । अगणिअ सेसजुआणा वाअवोलीणलेअ मज्जा
आ । अहसा अम्मइ दिसामुह पसारिअ छीतुहह कएण ॥१५१
व्याधिर्यथा । अस्सहणती रइ ञ्चिअ परिवड्डन्तु ङ्ग अगरुअ-
संलावम् । मरण विणोए णवि णा विरमावेउ विरहदुःखम्
॥१५२॥ उन्मादो यथा । अवलम्बह मांसङ्क ऋ णइ मगलङ्
घिआ परिब्भमइ । अत्थक्कगज्जिअ उत्तन्तहित्थहिअ-
आ पहिअजाआ ॥१५३॥ मूर्छा यथा । जम्मुच्छिआण अ-
सुओ कलम्ब अगन्धेण तक्कुणे पढिअम् । इअरहगज्जिअ स
ह्वो जीएण विणा ण वोलिन्तो ॥१५४॥ मरणं यथा । अज्ज-
म्मि पता वएक्कम्मा संवारेह पिअ सहिरुअन्तिम् । पहिऊण
तम्मि गए जइ ण मरिस्सण्णा रोइस्सम्॥ ताइमा विप्रलम्भज
न्मा चोद्धा दशा पिप्रेम पुष्टि समयः सम्भोगेणु स्वानुरूपामे-

वप्रेमप्रकर्षभूमिकामास्कन्दयन्ति ॥१५५॥ नायकेषुकथा व्यापीनायकोयथा। गुरोः शासनमत्येतुन्नशशाकसराघवः। योरावणशिरश्छेदकार्यभारेप्यविक्लवः ॥ १५६ ॥ प्रतिनायकोयथा। जेतारंलोकपालानान्तैर्मुखैरर्चितेश्वरम्। रामस्तुलितकैलासमरातिम्बहूमन्यत ॥ १५७ ॥ उपनायकोयथा। सहत्वावालिनंवीरन्तत्पदेचिरकाङ्क्षिते। घालोः स्थानइवादेशंसुग्रीवंसन्यवेशयत् ॥१५८॥ अनुनायकोयथा। समारुतसुतानीतमहौषधिहृतव्यथः। लङ्कास्त्रीणाम्पुनश्चक्रे विलापाचार्यकंशरैः ॥ १५९॥ कथाव्यापिनीनायिकायथा। तीएसविसेसदूमिअसवत्तिहिअआइणिव्वरणेन्तसिणेहम्। पिअगरुइआइणिमिअंसोहग्गगुणाणअग्गभूमीअपब्भम् ॥१६०॥ प्रतिनायिकायथा। तन्निअसकुसुमदामंहरिणाणिम्महिअसुरहिगन्धामोअम्। अप्पणइअरिपदूमिअपणइपि हिअएणरुप्पिणीअविइस्सम् ॥१६१॥ उपनायिकायथा। देवीस्वीकृतमानसस्यनियतंस्वप्नायमानस्यमेतद्गोत्रग्रहणादियंसुवदनायायात्कथञ्चव्यथाम्। इत्थंयन्त्रणयाकथञ्चदुपमपिक्षीण।निशाजाग्रतोदाक्षिण्योपहतेनसाप्रियतमास्वप्नेपिनासादिता ॥१६२॥ अनुनायिकायथा। श्लाघ्यानांगुणिनान्धुरिस्थितवतिश्रेष्ठान्ववायेत्वयिप्रत्यस्तव्यसनेमहीयसिपरम्प्रीतास्मिजामातरि। तेनेयम्मदयन्तिकाद्य भवतः प्रीत्यैभवत्प्रेयसेमित्रायप्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥ १६३ ॥ आभासेषुनायकाभासोयथा। क

हस्समा भिज्जउमअक्काइमीअकन्दोहदलसरिछेंहिम् । अच्छीहिंजोणदीसइघणघणहरुद्धपसरेंहिम् ॥१६४॥ नायिकाभासोयथा । कृतसीतापरित्यागः सरत्नाकरमेखलाम् । बुभुजेपृथिवीपालः पृथिवीमेवकेवलाम् ॥१६५॥ उभयाभासोयथा । अवऊहिअपुव्वदिसेसमयज्झोण्हाएसेविअपओसमुहे । माइणभिज्जउअरणीवरदिसाहुत्तपत्थिअम्मिमिअङ्के ।१६६। तिर्यगाभासोयथा । अोरन्तपङ्कअमुहिंवम्महणडिअंवसलिलसअणणिसस । अलिअछत्तीरणलिणिवाआइगमेइसहवरिंवक्काओ ।१६७। नायकेषुसर्वगुणसम्पद्योगादुत्तमः सयथा । रामोयज्जगतीह विक्रमगुणैर्यातः १ प्रसिद्धिम्परामस्मद्भाग्यविपर्ययाद्यदि परन्देवोनजानातितम् । बन्दीवैषयशांसिगायतिमरुद्यस्यैकबाणाहतिश्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥१६८॥ पादोनगुणसम्पद्योगान्मध्यमोयथा । किन्त्वोव्याप्तदिशाम्प्रकम्पितभुवामक्षौहिणीनाम्फलङ्किन्द्रोणेनकिमङ्गराजविशिखैरेवयदिक्राम्यसि । जीवद्भ्रातृशतस्यमेभुजवनरच्छायांसुखामाश्रितात्वन्दुर्योधनकेसरीन्द्रगृहिणीशङ्कास्पदङ्किन्तव ॥१६९॥ अर्द्धगुणसम्पद्योगात्कनिष्ठोयथा । एकस्मिन्शयनेमयामयसुतामालिङ्गनिद्रालसासुखिद्धं शयितेनमच्चरणयोः संवाहनव्यापृता । पादाग्रेणतिलोत्तमा. स्तनतटेसस्नेहमापीडिता हर्षावेवसमर्पितानिपुलकान्यद्यापिनोमुञ्चति ।१७०। सत्वप्रधानः सात्त्विकोयथा । शत्त्यावक्षसिमग्नयासहमया

१ रामोयं भुवनेषु विक्रमगुणैःप्राप्तःइति २ पुस्तके । २ घनच्छाये २ पुस्तके

मूर्छन्नङ्गाधिपेनिद्राणेषुचविद्रवत्सुकपिषु प्राप्तावकाशे द्विषि। माभैष्टेतिनिरुन्धतः कपिभटान्तत्रोद्भटभ्रू स्थितैर्मर्मच्छेदविसंष्ठुलाक्षरजडावाचस्त्वयानश्रुताः ॥१७१॥ रजःप्रधानोराजसोयथा। सामन्तमौलिमणिरञ्जितशासनाङ्कमेकातपत्रमवनेर्नतथा प्रभुत्वम्। अस्याः सखे! चरणयोरधिगम्यसम्यगाज्ञाकरत्वमहमद्ययथाकृतार्थः॥१७२॥ तमःप्रधानस्तामसोयथा। तपांवाशस्त्रंवाव्यपदिशतियः कश्चिदिहवः सदर्पादुद्दामन्निघ्नमसहमानक्कुलयतु। अरामां निःसीरध्वजदशरथीकृत्यवसुधामहत्क्षत्रकुल्यामपिपरशुरामः शमयति॥१७३॥ अनेकजातिः साधारणो यथा। स्नातातिष्ठतिकुन्तलेश्वरसुतावारोऽङ्गराजस्वसुर्द्यूतैरात्रिरियञ्जिताकमलयादेवीप्रसाद्याद्यच। इत्यन्तः पुरसुन्दरीः प्रति मयाविज्ञायविज्ञापितेदेवेनाप्रतिपत्तिमूढमनसाद्वित्राः स्थितंनाडिकाः।१७४। अनन्यजानिरसाधारणोयथा। आविवाहसमयाद्गृहेवनेशैशवेतदनुयौवनेपुनः। स्वापहेतुरनुपाश्रितोन्ययारामबाहुरुपधानमेषते।१७५।अहंकारप्रधानोधीरोद्धतोयथा। चक्रंदामभुजाकुलान्तगृहिणीदत्ताग्रपञ्चाङ्गुलंवज्रंभूधरपक्षशातिनसुरापानोन्मदंवावृथा। शूलंवासुररक्तबिन्दुनिचितङ्गृह्णातुशूलायुधोधृष्टद्युम्नमहंनिहन्मिसमरेकश्चित्परित्रायताम्।१७६। रत्युपचारप्रधानोधीरललितोयथा। आधत्तेविनयन्निरागसिनरिकुप्यन्तुनामेश्वरास्तेनखाशयशुद्धिरेवसुकरामायः प्रभणात्पुरः। किष्ण। मा

निनि मन्यसे यदि तदा निरयं मनोवर्त्तिनी ध्याता तामरसा
क्षि ! चित्रफलके कावा त्वदन्या मया ।१७७। उपशमप्रधा
नो धीरप्रशान्तो यथा । कुलममलिनं भद्रा मूर्त्तिर्मतिः श्रुति
शालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डित·
म् । प्रकृतिसुभगा ह्येते भावा अमी मदस्य च हेतवो व्रजति पुरुषो
यैरुन्मादं न त एव नवाङ्कुशाः ।१७८। विकत्थनोदारकर्मा धी·
रोद्धतः स यथा । कपाले जानक्याः करिकलभदन्तद्युति·
मपि स्मरस्मेरं गण्डे डुमरपुलकं वक्त्रकमलम् । मुहुः प·
श्यञ्छृण्वन्रजनिचरसेनाकलकलं जटाजूटग्रन्थिं द्रढयति·
रघूणां परिवृढः ॥१७९॥ कैतवप्रधानः शठो यथा । दृष्ट्वै
कासनसङ्गते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने निमी
ल्य विहितक्रीडानुबन्धच्छलः । ईषद्वक्रितकन्धरः सपुल
कः प्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्त्तो
ऽपरां चुम्बति ।१८०। कृतापराधोऽप्यविलक्षो धृष्टो यथा ।
शतं वारानुक्तः प्रियसखि वचोभिः सपरुषैः सहस्रं नि
र्धूतः० चरणनिपतितः पार्ष्णिहतिभिः । कियत्कृत्वो बद्धः
पुनरिह न वेद्मि भ्रुकुटयस्तथापि क्लिश्यन्मां क्षणमपि न धृ·
ष्टो विरमति ।१८१। हृदयङ्गमप्रवृत्तिरनुकूलो यथा । मुञ्च
कोपमनिमित्तकोपने ! सन्ध्यया प्रणमितोऽस्मि नान्यया ।
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ।१८२
औपराधिकप्रवृत्तिर्दक्षिणो यथा । अनेन कल्याणि ! मृणाल
कोमलं व्रतेन गात्रं ग्लपयस्यकारणम् । प्रसादमाकाङ्क्षति
यस्तवातुरः स किं त्वया दासजनः प्रसाद्यते ।१८३। नायि

कागुणेषुसर्वगुणसम्पद्योगादुत्तमायथा । हत्थिआइं समंखलकोमलाइंवीसंभकोमलंअअणम् । सब्भाव कोमलपुलाइअवणम्मिमोसुमहिलाणम् ।१८४।पादोनगु णसंपद्योगान्मध्यमायथा । णिद्दाइअदंसणुक्खि त्तपहिअअस्सेणवव्वसुपहेण । गहवइइव्वहुआदुल्लङ्घि वाउराहअइहग्गामो ।१८५। अर्द्धगुणसंपद्योगादधमाय था । तङ्करखणाविरज्जसितङ्करउवहसस्सिअलमहिला ओ । एहेहिंवारवालिहअं सूमइमलंसमुप्पिसिमो ।१८६। वयः कौशलाभ्यामसम्पूर्णामुग्धायथा । सहिआहिरुत्त समाणाथणएलग्गंकुसुम्भपुप्फन्ति । मुद्धवहुआहसिज्ज इपप्फोडन्तीणहवआइम् ।१८७। वयसापरिपूर्णामुग्धाय था । पढिवक्खमण्णुउडेलावसउडेअणङ्गअकुम्भे । पुरि ससअहिअअघरिएकीसथणन्तीधणेवहस्सि ।१८८। वयः कौशलाभ्यांसंपूर्णाप्रगल्भायथा । खिस्सस्सठवेइउपइणो गिम्हावरण्हरमिअस्स । ओल्लङ्गलब्भतइप्फंण्हाणसुअन्ध चिउरभारम् ।१८९। यत्नापनेयमानाधीरायथा । पडिल हअणाउवन्तीहिअअन्दूमेइमाणिणीहिअअम् ॥ अइदू रेविअम्हिंअगरुअरोसमज्झत्थभणिएहिम् ।१९०।अय- त्नापनेयमानाऽधीरायथा । अवलम्बिअमाणपरंमु हीअएतस्समाणिणिपिअस्स । पुठ्ठिपुलउग्गामोतुह कहेइसमुहठ्ठिअंहिअअम् ।१९१। आत्मीयास्वायथा । घ रिणीएमहाणसकम्मलग्गमसिमइलेणहत्थेण । छि- त्तंमुहंहसिज्जइचन्दावत्थङ्गअम्पइणा ।१९२। परकीयान्यदी

यायथा । अइमिवरणिग्गअदक्षोएरक्षोसाहइदाततरुणाणम् । एत्थघरेहलिअबहूएहहमेत्तत्थणीवसइ ।१९३ पाणिगृहीताऊढायथा । वलत्तणदुल्ललिआएअज्जमणज्जकुंअणंवबहूए । णाआमिघरेएआइणिक्तिणित्तोपईरुद्धो ।१९४ कुमारीअनूढायथा । कस्सकरोबहुपुण्यफलेंकतरुणोतुहंणिसम्मिहिइ । थणपरिणाहेचम्महणिहाणाकलसेबव्वपारोहो ।१९५ प्रथमोढाज्येष्ठायथा । उपणअंपढमपिआएरक्खिनकामोविमधुरेहिम् । छेअवरोविणलिउअइअहिणवबहुआविलासेहिम् ।१९६ पश्चादूढाकनीयसीयथा । उठ्ठन्तमहारम्भेथणएदठ्ठूणमुद्धबहुआए । ओसिण्णकवोलाएणीससिअं पढमघरिणीए ।१९७ अहङ्कारहृदिरुद्धतायथा । अस्स महिलापखक्षन्देदेंक्ककरेसुअम्हदरअस्स । पुरिसाएकन्तरसाबहुदोसगुणेविआणन्ति ।१९८ गूढमानर्द्धिरुद्धात्तायथा । जाणाइजाणावेउंअणुणअविहीणरीअमाणपरिसेसम् । रइविक्कमंसिविणआवलम्बणंसच्चिअपहुकुणन्ती ॥१९९ निर्वाणमानाशान्तायथा । जइआपिओणदीसइभणहइलाकस्सकीरएमाणो । अहदिउम्मिविमाणोत्तातस्सपिअत्तणकुंसो ॥२००॥ श्लाघनीयमानाललितायथा । अंसूहसिएहिंउआलम्भाअच्चुअआरेहिरूसिअदाइ । अंसूहिअमाहाइएसोमस्सेसुमहिलाणम् ॥ २०१ ॥ अनियतानेकोपभोग्यासामान्यायथा । कढूएघूमङ्घारेअब्भुत्तणमग्गिणोसमपिआहि । मुहकमलचुम्बणलेहलम्मि

पासट्ठिएद्दिअरे ॥२०२॥ पत्यन्तरप्राप्तापुनर्भूर्यथा । तहसाजाणइपावालोएपच्छण्णमविणअञ्ञाउम् । जहपढमडिचअसञ्जिअलिङ्गमज्झचरित्तवलीण ॥२०३॥ कलाचतुःषष्टिविदग्धगणिका यथा । सच्छन्दरमणदंसणरसवड्ढिअगरुअवम्महविलासम् । सुविअड्ढसवेविलक्खारसिअक्कोवसिअन्तरइ ॥ २०४ ॥ रूपयौवनमात्रोपजीविनी रूपाजीवा यथा । अयमेवदह्यमानस्मरनिर्गलधूमवर्त्तिकाकारः । चिकुरभरस्तव सुन्दरि! कामिजनाङ्कुरीकुरुते ॥ २०५ ॥ कुट्टिमिलादीनाङ्कर्त्री विलासिनी यथा । सामलसुन्दरीणंविब्भममावहइअविणओञ्च्चेअ । धूमञ्चिअपज्जलिआणबहुमओसुरहिदारूण ॥ २०६ ॥ यथोक्तलक्षणा सुखयितृका यथा । पञ्चसागअणुरवाञावहन्तइलोअलोअणणन्दम् । अण्णत्थसुविअसव्वरिणहभूसणादिणअइणमोदें ॥२०७॥ कलहान्तरिता यथा । जहसोविलक्खहिअओमएअहव्वाइअगणिअप्पणओ । परवज्जणच्चिरीहिंतुम्हेहिंउवेक्खिओजन्तो ॥ २०८ ॥ विप्रलब्धा यथा । अहमासहिस्तहिच्छिअवाखीरवणम्मिचुक्कसङ्केओ । तुहदंसणंविअग्गइपब्भट्ठणिहणठाणंव ॥ २०९ ॥ वासकसज्जा यथा । एहिइपिओत्तिणिमिसंव्वजग्गिअज्झामिणीअपढमद्धम् । सेसंसतापपरव्वसाएत्ररिसंव्वोलीणम् ॥ २१० ॥ स्वाधीनपतिका यथा । सालोएच्चिअसूरेघरिणीघरसामिअस्सघेत्तूण । णेच्छन्तस्सविपाएधुअइहसन्तीहसन्तस्स ॥ २११ ॥ अभिसा

रिकायथा । गमिमहिसितस्स पासम्माकुरसुलक्खणिवड्-
ढउम्मि अङ्को । दुद्धंदुद्धुम्मिअ चन्दिआएको पेच्छाइमुह-
न्ते ॥ २१२ ॥ प्रोषितभर्तृकायथा । गिम्हे दवग्गिमसि-
मइलिआइं दीसन्ति विंझसिहराइम् । आसउम्पउत्थ-
पइएणहोन्ति णवपाउसब्भाइम् ।२१३ विरहोत्कण्ठिताय-
था। अस्मिन्वर्षमहेनवर्त्तत इदं यत्कामदेवोत्सवेऽस्येय-
मपुत्रि! निरक्षयातदधुनाकिञ्चिन्मुखेदीयताम् । इत्यु-
क्तंजरतीजनेनकथमप्यधन्यवध्वा ततः पर्यस्तोऽहनिक-
लिपतश्चक्षवलो थौतश्चधाराम्बुभिः ॥ २१४॥ हीनपात्रेषु-
शकारोयथा । पलिच्चलेलं गवदशाकलाक्षरपावालअ-
शुत्तशद्देणछत्रम् । मंशञ्चखादन्तु हओठठठक्काहिचु
कुम्बुकुम्बुक्कुचुक्कुशुकुन्ति ।२१५ ललकोयथा। कम्बलिवा-
विणएक्कत्तिकुट्टम्मलदन्तिधिट्ठितुट्ठिएमइवेआलसि ।
लत्तिं सोवरिजग्गिरिक्कतुमंसहिक्कुरा त्रिदुपोप्फलिणलो-
क्कीसिणआगसि ॥ २१६ ॥ अमात्यादिरासन्नाईः पा-
खण्डादिर्वापीठमर्दः । तयोरमात्येषुमाल्यवान्यथा।
हावत्साः खरदूषणत्रिशिरसोवध्याः स्थ पापस्यमेहा-
हावत्सबिभीषणत्वमपिमेकार्येणहेयः स्थितः । हामद्व
त्सलवत्सरावणमहत्पश्यामितेसङ्कटंवत्सेनैकशिहाहला-
सिनचिरंत्रीन्पुत्रकान्द्रक्ष्यसि ॥ २१७ ॥ पाखण्डेपुभे-
रवानन्दोयथा । दंसेमितम्पिससिणंअसुहाअइणणम्पभे
बिलसमविरदस्सगईणहट्टे । आणोमिजक्खसुरसिद्ध-
गणङ्गणाओतंणत्थिभूयिवलयेमहजंणसज्जम् ॥२१८॥

वैहासिकः क्रीडनको विस्रास्यश्च विदूषकः ।१९५। यथा । फुल्लुक्करङ्कलमकूरसमं वहन्ति जे सिन्दुवारविडआ महवल्लहा दे । जे गालितस्समहिसीदहिणेसरिच्छा रुञ्चन्ति मुद्धविअइल्लपसूणपुञ्जा ॥२१९॥ मान्यः कलत्रवान्भुक्तविभवो गुणवान्विटः ॥१९६॥ यथा । शकार किम्प्रार्थनया प्राप्तार्णमिषे यावा । अकार्यवर्जम्मे ब्रूहि किमभीष्टङ्करोमि ते २२०॥ धात्रेयकादिश्चेष्टो यथा । चन्द्रापीडोऽथ सञ्जातपीडः कादम्बरीम्प्रति । प्राहिणोत्स्वस्त केयूरः केयूरकमुपस्थितम् ॥२२१॥ पताकासु । स्वात्मोपयोगिन्यन्योपयोगिन्यनुपयोगिनी । पताकेत्यापताकेति प्रकरीति प्रकीर्त्यते ॥१९७॥ तासु पताका हनूमान्यथा । दिष्ट्यासोयम्महाबाहुरञ्जनानन्दवर्द्धनः । यस्य वीर्येण कृतिनो वयञ्च भुवनानि च ॥२२२॥ आपताकाप्रकर्यौ मारीचजटायुषौ यथा ॥ रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ । जहार सीताम्पक्षीन्द्रप्रयासक्षणविघ्नितः ॥२२३॥ सहजापूर्वजागन्तुः सखीह त्रिविधोच्यते ॥१९८॥ तासु लवङ्गिकादिः सहजा यथा । उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते । मलीमसमुखी वर्त्तिः प्रदीपशिखया यथा ॥ २२४ ॥ कामन्दक्यादिः पूर्वजा यथा । तथा विनयनम्रापि मया मालत्युपायतः । मीता कतिपयाहोभिः सखीविस्रम्भसेव्यताम् ॥ २२५ ॥ त्रिजटादिरागन्तुर्यथा । जाणइ सिणेहभणिअम्मा रअणि रित्ति मे जुडछसुवअणम् । उज्जाणंमिवणिक्किमअंजं सुरहिं तेल-



साणघेप्पइ कुसुमम् ॥ २२६ ॥ नायकगुणेषु महा-

कुलीनत्वं पुंसो यथा । वासिष्ठैः सुकृतोद्भवोऽध्व-
रशतैरस्त्यग्निकुण्डोद्भवो भूपालः परमार इत्यधिपतिः
सप्ताब्धिकाञ्चेर्भुवः । अद्याप्यद्भुतहर्षगद्गदगिरो गाय-
न्ति यस्योद्भटं विश्वामित्रजयोर्जितस्य भुजयोर्विस्फूर्जितं
गुर्जराः ॥ २२७ ॥ औदार्यं यथा । दिङ्मातङ्गघटा-
विभक्तचतुराघाटा मही साध्यते सिद्धा सापि वदन्त एव हि
वयं रोमाञ्चिताः पश्यत । विप्राय प्रतिपाद्यते किमपरं
रामाय तस्मै नमो यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चा-
स्तङ्गतम् ॥ २२८ ॥ महाभाग्यं यथा । दोर्निष्पेषवि-
शीर्णवज्रशकल प्रत्युप्तरूढव्रणग्रन्थ्युद्भासि निमग्नमोघ-
स्थवन्मातङ्गदन्तोद्गमे । भर्तुर्नन्दनदेवताविरचितस्र-
ग्दाम्नि भूमेः सुतावीरश्रीरिव तस्य वक्षसि जगद्वीरस्य
विश्राम्यतु ॥ २२९ ॥ कृतज्ञता यथा । कृतककुपितैर्बा-
ष्पाम्भोभिः सदैन्यविलोकितैर्वनमपि गता यस्य प्रीत्या
धृतापि तथा त्वया । नवजलधरश्यामाः पश्यन्दिशो भ-
वतीं विना कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥२३०॥
रूपसम्पद्यथा । व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महा-
भुजः । आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ २३१ ॥
यौवनसंपद्यथा । महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभा-
वं कलभः श्रयन्निव । रघुः क्रमाद्यौवनभिन्नशैशवः पुपो-
ष गाम्भीर्यमनोहरं वपुः ॥ २३२ ॥ वैदग्ध्यसम्पद्यथा ।
कोऽयं श्यामिनि भूषणाङ्कितकरे शोणः कथं कुङ्कुमात्कू-
र्पासान्तरितः प्रियं विनिमयः पश्यापरं क्वास्ति मे । प-

श्यामीत्यभिधाय सान्द्रपुलकौ मृद्नन्मृडान्याः स्तनौ हस्तेन प्रतिनिर्जितेन्दुरवलाद्दद्यूते हसन्वो हरः ॥२३३॥ शीलसम्पद्यथा । कात्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणन्ते । आचक्ष्व मत्वा वशिनां रघूणाम्मनः परस्त्रीविमुखप्रवृत्ति ॥ २३४॥ सौभाग्यसम्पद्यथा । असौ विद्याधारः शिशुरपि विनिर्गत्य भवनादिहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः । यदालोकस्थाने भवति पुनरुन्मादतरलैः कटाक्षैर्नारीणाङ्कुवलयितवातायनमिव ॥ २३५ ॥ मानिता यथा । यदार्थकामम्भवता समाच्यतामितिक्षमन्ते तदनल्पचेतसाम् । कथम्प्रसह्याहरणैषिणाम्प्रियाः परानुवृत्त्या मलिनीकृताः श्रियः ॥ २३६ ॥ उदारवाक्यत्वं यथा । ख्याता एव वयञ्जगत्सु चरितैर्वाग्भिः किमाख्यायते संयत्तो भवशक्तिरस्ति भवतः सत्यम्मनुष्यो भवान् । शस्त्रैरव्यवधीयमानयशसः प्रायो वयन्तेषु चेत्प्रायस्ते न नु सन्ति ते पि गिरयो यैर्वा नराः शस्त्रिणः ॥ २३७ ॥ स्थिरानुरागिता यथा । ततः कैरप्युक्ते परिणयविधौ काष्ठमुनिभिः पुराणैरातङ्कग्लपितहृदयेनक्षितिभृता । विना वाचं नैतत्क्षममिति निधायाननमधःपतद्बाष्पाम्भोभिर्निखिलमिव दत्तं प्रतिवचः ॥ २३८॥ नायिकागुणेषु स्त्रियामहाकुलीनता यथा । मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः । न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ २३९ ॥ औदार्यं यथा । भ्रूभेदे सहसाकृतेपि वदनन्नीतं पराञ्चम्न तामीषन्मामप्रतिभेदकारि हासतन्नोक्तं

बचोनिष्ठुरम् अन्तर्बाष्पजलीकृतम्प्रभुतयाचक्षुर्नविस्फारि तङ्कोपश्चप्रकटीकृतोदयितयामुक्तश्चनप्रश्रयः ॥ २४० ॥ महाभाग्यंयथा तान्नारदः कामचरःकदाचित्कन्यांकिलप्रेक्ष्य पितुः समीपे। समादिदेशैकवधूम्भवित्रीम्प्रेम्णाशरीरार्द्धहरांहरस्य ॥ २४१ ॥ कृतज्ञतायथा । परिससरिसन्तुहइमंकवरससरिसङ्कप्पन्तिसाअखइणा । कहआचिन्तिज्जम्म हिलासरिसन्नसम्पणइमेमरणम् ॥ २४२ ॥ रूपसम्पद्यथा । आभरणस्याभरणम्प्रसाधनविधेः प्रसाधनविशेषः । उपमानस्यापिसखेप्रत्युपमानंवपुस्तस्याः ॥२४३॥ यौवनसम्पद्यथा । उन्मीलितंतूलिकयेवचित्रंसूर्यांशुभिर्भिन्नमिवारविन्दम् । बभूवतस्याश्चतुरस्रशोभिवपुर्विभक्तन्नवयौवनेन ॥ २४४ ॥ वैदग्ध्यसम्पद्यथा । एकत्रासनसङ्गतिः परिहृताप्रत्युद्गमाद्दूरतस्ताम्बूलानयनच्छलेनरभसाश्लेषोपिसंविघ्नितः । आलापोपिनमिश्रितः परिजनंव्यापारयन्त्यान्तिकेकान्तम्प्रत्युपचारतश्चतुरयाकोपः कृतार्थीकृतः ॥ २४५ ॥ शीलसम्पद्यथा । चतुरघरिणीपिअदंसणाअबालाप उत्थवइआअसइसआण आखणगखाण्डअंशीलम् ॥ २४६ ॥ सौभाग्यसम्पद्यथा । सञ्चारिणीदीपशिखेवरात्रौयंयंव्यतीयायपतिंवरासा । नरेन्द्रमार्गाट्टइवप्रपेदेविवर्णभावंससभूमिपालः ॥२४७॥ मानितायथा । शैलात्मजापिपितुरुच्छिरसोभिलाषंव्यर्थंसमर्थ्यललितंवपुरात्मनश्च । सख्योः समक्षमितिचाधिकजातलज्जाशून्याजगामभवना

भिमुखंकथञ्चित् ॥ २४८ ॥ उदारवाक्यत्वंयथा । यथाश्रुतंवेदविदांवर ! त्वयाजनोयमुच्चैः पदलङ्घनोत्सुकः । तपःकिलेदन्तदवाप्तिसाधनम्मनोरथानामगतिर्नविद्यते ॥ २४९ ॥ स्थिरानुरागितायथा । अलंविवादेन यथाश्रुतन्त्वयातथाविधस्तावदशेषमस्तुसः । ममात्रभावैकरसम्मनः स्थिरंनकामवृत्तिर्वचनीयमीक्षते ॥ २५० ॥ पाकभक्तिष्वाद्यावस्वाद्वन्तेस्वादुमृद्वीकापाकोयथा । प्राक्प्रामन्दहताकुलः परिभवोयेनाथसन्ध्यानतौसेर्ष्यावोत्तुचण्डिकाचरणयोस्तंपातयन्तीपतिम् । कुर्वन्त्याभ्यधिकंकृतेप्रतिकृतम्मुक्तेनमौलौमुहुर्बाष्पेणाद्रुतकज्जलेव लिखितंलक्ष्मेवचन्द्रे यथा ॥२५१॥ आद्यन्तयोःस्वादुनारिकेलीरीतिपाकोयथा । जहइच्छातहरमिअव्वाआपत्तापङ्कआघूआ । घरसामिअस्सअज्जविसोकोजहच्छाइअव्वम् ॥२५२॥ आदिमध्यान्तेषुस्वादुस्वादुतरस्वादुतममित्याम्रपाकंयथा । शापादसिप्रतिहतास्मृतिलोपरूक्षेभर्त्तुर्व्यपेतलमसिप्रभुतातवैव । छायानमूर्छतिमलोपहतप्रसादेशुद्धेतुदर्पणतलेसुलभावकाशा ॥ २५३ ॥ यन्नापैतिनचातिशोभतेतन्नीलीरागंयथा । हित्वासीतान्दशमुखरिपुर्नोपयेमेयदन्यान्तस्याएवप्रतिकृतिसखोयत्क्रतूनाजहार । वृत्तान्तेनश्रवणविषयप्रापिनातेनभर्त्तुः साद्दुर्वारंयधमपिपरित्यागदुःखंविषेहे ॥ २५४॥ अपैतिनचशोभतेचतत्कुसुम्भरागंयथा । बहुवल्लहस्सनाहोइवल्लहाकहविपञ्चदिहिअहाइं । सोकिञ्छडथम्मगाइ कन्तोमट्टच्छुचबहु

अत्र ॥ २५५ ॥ यन्नापैत्यलितचशोभतेतन्मञ्जिष्ठारागंयथा । वेवइ जस्स सविडिअन्तलिअम्महइ छल्लआइअत्थवअलसम् । पेम्मसहत्तविमुहिअंवाओवासगममुअंवासहुम् ॥ २५६ ॥ गूढव्यलीकमन्तर्व्याजंयथा । प्रत्यग्रोज्झितगोकुलस्यशयनादुत्स्वप्नमूढस्यमेसागोत्रस्खलनाद्यपैतु यदिवाराधेतिभीरोरिति । रात्रावस्वपतोदिवाचविजनेनालिचाभ्यस्यताराधामस्मरतः श्रियंरमयतः खेदोहरेः पातुवः ॥ २५७ ॥ अगूढव्यलीकंबहिर्व्याजंयथा । चक्षुर्यस्यतवाननादपगतन्नाभूत्क्वचिन्निर्वृतंयेनैषासततन्त्वदेकशयनंवक्षस्थलीकल्पिता । येनोक्तासिविनात्वयाममजगच्छून्यंक्षणाज्जायतेसोयन्दम्भधृतव्रतः प्रियतमः कर्तुञ्चिमभ्युद्यतः ॥२५८॥ अव्यलीकनिर्व्याजंयथा । किङ्कण्ठेशिथिलीकृतोभुजलतापाशः प्रमादान्मया निद्राच्छेदविवर्त्तनेष्वभिमुखन्नाद्यासिसंभाषिता । अन्यस्त्रीजनसङ्कथालघुरहंस्वप्नेत्वया वीक्षितोदोषम्पश्यसिकिम्प्रियेपरिजनोपालम्भयोग्येमयि ॥ २५९ ॥ धर्मानुबन्धिधर्मोदर्कंयथा । अथसविषयव्यावृत्तात्मायथाविधिसूनवेनृपतिककुदन्दरवायूनेसितातपवारणम् । मुनिवनतरुच्छायान्देव्यातयासहशिश्रियेगलितवयसामिक्ष्वाकूणामिदंहिकुलव्रतम् ॥२६०॥ अर्थानुबन्ध्यर्थोदर्कंयथा । भूत्वाचिरायचतुरन्तमहीस पत्नीदौष्यन्तिमप्रतिरथन्तनयंप्रसूय । तत्सन्निवेशितभरेणसहैवभर्त्रा १ शान्तेकरिष्यसिपदस्पुनराश्रमेस्मिन ॥२६१॥ यत्पुनःकाममेवानु



१ भर्त्रा तदर्पित कुटुम्बभरेणसार्धमिति २ मृगाक्षी

बध्नातितत्काव्यामोदकं यथा। अद्वैतंसुखदुःखयोरनुगुणंस र्वास्ववस्थासुयद्विश्रामोहृदयस्ययत्रजरसायस्मिन्नहार्यो रसः। कालेनावरणात्ययात्परिणतेयत्स्नेहसारेस्थितम्भ द्रन्तस्यसुमानुषस्यकथमप्येकंहितत्प्राप्यते॥२६३॥ "ना नालङ्कारसंसृष्टैः प्रकाराश्चरसोक्तय" इत्युक्तम्, तत्रालंका रसंसृष्टेरित्यत्रवक्तव्येनामाग्रहणंगुणरसानामुपसंग्रहा- र्थम्। तेषामपिहिकाव्यशोभाकरत्वेनालङ्कारत्वात्। य दाह। काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते। तेचाद्या पिविकल्प्यन्तेकस्तान्कार्त्स्न्येनवक्ष्यति॥१८९॥ काश्चिन्मार्ग विभागार्थमुक्ताःप्रागप्यलंक्रियाः। साधारणमलंकारजा तमन्यत्प्रदर्श्यते॥१९१॥ तत्रकाव्यशोभाकरानित्यनेनश्ले षोपमादिवत्तद्गुणरसभावतदाभासप्रशमादीनप्यनुगृह्णा ति। मार्गविभागकृतद्गुणानामलंक्रियोपदेशेनश्ले- षादीनांगुणत्वमिवालङ्कारत्वमपिज्ञापयति। श्लेषःप्रसा दः समतामाधुर्यंसुकुमारता। अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः॥२००॥ इतिवैदर्भमार्गस्यप्राणादशगुणाः स्मृताः। तेषांविपर्ययः प्रायोगौडवर्त्मनिलक्ष्यते॥२०१॥ इति श्लेषादीनान्दशानामेवमार्गप्रतिभाकारित्वंब्रुवन्काव्यशो भाकरत्वेनगुणान्तराणामप्यलङ्कारत्वमुपकल्पयति। य दाह "कस्तान्कान्स्न्र्येनवक्ष्यती"ति। युक्तमिदमुक्तमयु- क्तन्त्विदमुक्तम्। रसानामलङ्कारतेतितेषांगुणानामिवा लङ्कारव्यपदेशाभावात्। नायुक्तम्। युक्तोत्कर्षाणामूर्ज स्विरसवत्प्रेयसामुपदेशेन। तद्यथा, प्रेयः प्रियतराख्या

नं रसवद्रसपेशलम् । ऊर्जस्विरूढाहंकारं युक्तोत्कर्षं च तत् त्रयम् । तत्रोर्जस्विरूढाङ्कारमित्यनेनात्मविशेषनिष्ठस्योत्कृष्टादृष्टजन्मनोनेकजन्मानुभवसंस्काराहितदृढिम्नः सङ्ग्रामेण सम्पदुत्पातातिशयहेतोरलंकारविशेषस्योपसंग्रहादहङ्काराभिमानश्रृङ्गारापरनाम्नोरसस्यमानमयविकाररूपेणाभिमानिनाम्मनसिजाग्रतः पराङ्कोटिमुपवर्णयति । रसवद्रसपेशलमित्यनेन विभावानुभावव्यभिचारिसात्त्विकसंयोगाद्रसनिष्पत्तिरितिरत्यादिरूपेणानेकधाविर्भवतोऽभिवर्द्धमानस्यपरप्रकर्षगामिनः श्रृङ्गारस्यमध्यमावस्थांसूचयति । प्रेयतराख्यानमित्यनेन समस्तभावमूर्द्धाभिषिक्तायारतेः परप्रकर्षाधिगमाद् भावनाभिगमे भावरूपतामुल्लङ्घ्य प्रेमरूपेण परिणतायामुपादानाद् भावान्तराणामपिपरप्रकर्षाधिगमे रसरूपेणपरिणतिरिति ज्ञापयन्नहंकारस्योत्तरांकोटिमुपलक्षयति । सर्वेषामपिहिरत्यादिप्रकर्षाणांरतिप्रियो, रणप्रियः, परिहासप्रियो, ऽमर्षप्रियइतिप्रेमण्येवपर्यवसानम्भवति । युक्तोत्कर्षं च तत् त्रयमित्यनेनायुक्तोत्कर्षाणांत्रयाणामप्यूर्जस्विप्रभृतीनाङ्गुणत्वमेवनालङ्कारत्वमित्यवस्थापयति । तथाहि । और्जित्यम्भाविकम्प्रेयइतिगुणेषुभण्यतेकुतः पुनरिदमेकदोर्ज्जस्विरसवत्प्रेयसामलङ्कारत्वमुच्यते ॥ भूमनिन्दाप्रशंसासुनित्ययोगेतिशायने । संसर्गे[1]ऽस्तिविवक्षायाम्भवन्तिमतुबादयः । यथागोमान्देशो, वाचालोबटु, र्वाग्ग्मीविपश्चित, फलिनोवृक्षाः बलवान्मन्दो, दण्डी,



१ संबन्धे इति पाठः २ पुस्तके ।

गोमती, शोणेति । तत्रोर्ज्जस्विरसवतोरलङ्कारत्वविवक्षायामतिशायनेत्रा, भूम्निवामतुबर्थीयः १ । गुणत्वविवक्षायान्तु प्रशंसानित्ययोगयोरितिद्रष्टव्यम् । नित्योहिकाव्ये गुणयोगइवरसादियोगः । गुणवतोरसवतश्चनिश्चितैवास्यप्रशंसा । संसर्गस्तुगुणानामवश्यमुपादानेषु निन्दापुनर्दोषहानेर्नत्रितरति । गुणेषुप्रेयइतिरूपाभेदात्कथमलङ्कारत्वेतदुत्कर्षप्रतीतिः । यथा । युधिष्ठिरः श्रेष्ठतमः कुरूणामिति । तत्रातिशायिगुणान्तरेणलदवगलिरिलिचेत् । इहापियुक्तोत्कर्षञ्चतत्त्रयमितिवाक्यान्तरेणभविष्यति । नचातिशायिकाः स्वार्थातिरिक्तङ्किमपिप्रुवतेश्रपितुप्रकृत्युपात्तमेवप्रकर्षादिकङ्गमयन्ति । स्वार्थिकेषुह्येतेविधीयन्ते । एवमवस्थापितेगुणरसानामलङ्कारत्वेषट्प्रकारको रसालङ्कारसंकरः सम्भवति । गुणसंकरो, ऽलंकारसंकरो, गुणालंकारसंकरो, रससङ्करो, रसगुणसंकरो, रसालङ्कारसंकरश्चेति । नन्वत्रगुणानांसङ्करव्यवहारोनोपपद्यतेवहुष्वपिगुणेषुगुणवदित्येकव्यपदेशात् । नैवम् ॥ त्रिविधागुणाः । शब्दगुणा, अर्थगुणा, दोषगुणाश्च । तेतुप्रत्येकन्द्विधा । उल्लेखवन्तोनिरुल्लेखाश्च । तत्रशब्दगुणेषुसमाधिमाधुर्य्यौदार्यगाम्भीर्यादयः सोल्लेखाः । श्लेषप्रसादसमतासौकुमार्यादयोनिरुल्लेखाः । अर्थगुणेषुप्रसादरीतिकान्त्यादयः । अर्थव्यक्तिसौक्ष्म्यगाम्भीर्यसंमितत्वादयोनिरुल्लेखाः । दोषगुणेषुग्राम्यपुनरुक्तापार्थान्यार्थादयः । शब्दहीनसंभ्रमापक्रमविसंख्यादयोनिरु



१ मलर्थीयइतिपुस्तकान्तरे

ल्लेखाः। तत्रसजातीयानांसोल्लेखानामेवंविजातीयाना न्तुनिरुल्लेखानामपिसङ्करव्यवहारः प्रवर्त्तते। सजाती यानांशब्दगुणेषुसमाध्यादीनांयथा। णवपल्लवेसुलोलइ घोलइविलवसुवलइसिहरेसु। ववइपवएसुक्षमहावसन्त लच्छीअसोअस्स॥ अत्रान्यधर्म्माणामन्यत्रारोपणंसमा धिः, पृथक्पदतामाधुर्यं,बन्धविकटत्वमुदारता,ध्वनिम त्ता गाम्भीर्यमिति सजातीयाः सङ्कीर्यन्ते। यतोवसन्तल क्ष्मीरशोकस्यइतिपदयोः शब्दध्वनिरपिपरिस्फुरति। य थाकस्यचिदशोकस्यमानिनोङ्गेषुप्रियाङ्गनासविलासवच्चे ष्टतेतथाऽस्येयमिति॥ २६३ ॥ अन्यार्थगुणेषुश्लेषा दीनांयथा। जनः पुण्यैर्यायाज्जलधिजलभावञ्जलमुच- स्तथावस्थंचैनन्निदधतुशुभे शुक्तिवदने। ततस्तांश्रे- योभिः परिणतिमसौविन्दतुयथारुचिन्तन्वन्पीनस्तनि हृदिसत्रायंविलुठति॥ अत्रसंविधानेसुसूत्रताश्लेषो, ऽर्थस्य प्राकट्यम्प्रसाद, उत्पत्त्यादिक्रियाक्रमोरीति, दीप्तरसत्वङ्कान्ति रित्यर्थगुणाः सजातीयाः सङ्कीर्यन्ते ॥ २६४ ॥ दोषगुणेषुक्रमादीनांयथा। हन्यतेसावरारो- हास्मरेणाकाण्डवैरिणा। हन्यतेचारुसर्वाङ्गीहन्यतेमञ्जु भाषिणी॥ अत्रहन्यतइत्यमङ्गलार्थं,वरारोहेत्यश्लीलार्थं, हन्यतइतिपुनरुक्तं,चारुसर्वाङ्गीत्युक्तौवरारोहेतिव्यर्थम्। तएतेसजातीयाश्चत्वारोपिदोषगुणाः सङ्कीर्यमाणाः क- स्यचिदुन्मत्तभाषिणोऽनुकम्पाद्यतिशयविवक्षायामभ्यनु ज्ञायन्ते। यदाह। अनुकम्पाद्यतिशयोयदिकश्चिद्विवक्ष्य

ते। नदोषः पुनरुक्तादौप्रयुतेयमलङ्क्रिया ॥ २०२॥ अ थासजातीयानां शब्दगुणानामर्थगुणानाञ्च सङ्करोय॰ था। कोनाम नोदयतिनास्तमुपैतिकोवालोकोश्वरः पुनरयंसविलाजगत्सु । यत्रोदयास्तमयभाजिरुचाब्धिघानेद्वेधाभवत्यहरितिक्षणदेतिकालः ॥ अत्रयावदर्थंपदतासङ्गितत्वं, सम्यग्बन्धविकटत्वमुदारता, विशेषणगुणयोग उदात्तत्वमिति शब्दगुणा उक्तार्थनिर्वहणं प्रौढि, रर्थप्राकट्यं प्रसादो, रूढाहङ्कारतोर्जित्यमित्यर्थगुणाःसङ्कीर्यन्ते ॥ २६५ ॥ शब्दगुणानांदोषगुणानाञ्चयथा । एह्येहिवत्सरघुनन्दनपूर्णचन्द्रचुम्बामिमूर्द्धनिचिरायपरिष्वजेत्वाम्। आरोप्यवाहृदिदिवानिशमुद्वहामिवन्देथवाचरणपुष्करकद्वयन्ते ॥ अत्रभावतोवाक्यसिपत्तिर्भाविकत्वं;प्रसिद्धार्थपदताप्रसादः, प्रियार्थपदोपादानम्प्रेय इति शब्दगुणा एह्येहीति पुनरुक्तं; वत्सेत्युक्तात्वत्पादाब्जद्वयंवन्दइति विरुद्धं, मूर्द्धिन्चुम्बामिहृदिवहामीत्यादौवन्दइतिक्रियास्वनुपयोगात्, पूर्णचन्द्रेतिदर्शनादिक्रियोपयोगिव्यर्थंचेतिदोषगुणाः परस्परंसङ्कीर्यन्ते। रसाक्षिप्तचित्तादौहिपुनरुक्तादयोन दुष्यन्ति ॥ २६६ ॥ अर्थगुणानान्दोषगुणानांयथा । किन्द्वारिदैवहतिके!सहकारकेणसंवर्द्धितेनविषपादपएष पापः । अस्मिन्मनागपिविकाशविकारभाजिभीमाभवन्तिमदनज्वरसन्निपाताः ॥ अत्रदीप्तरसत्वङ्कान्ति, रर्थप्रकाट्यं प्रसादः, उक्तार्थनिर्वहणम्प्रौढिरित्यर्थगुणा

दै जहतिके इति, विषपादपां यत्पापद इत्यमङ्गलार्थंग्राम्यं किमनेनसंवर्द्धितेन इत्यत्र मदनज्वरसन्निपाताद् इत्यत्र चक्रत्यप्रयोजनाद्देविंरहिणो द्रष्टुरित्यादेश्चाध्याहारादसम्पूर्णवाक्यतायामर्थव्यक्तिविपर्ययो,ऽस्मिन्विकाशविकारभाजीति विकाशशब्दस्य पुष्पविषयस्य वृक्षेपि प्रयोगेऽवाचकत्वादसमर्थ इति दोषगुणा मिथः सङ्कीर्यन्ते । यत्नोरसाक्षेपात्परिहासलेशोत्क्षमङ्गलम् । प्रविश पिण्डीं द्वारं भक्षयेति न्यायात्प्रसिद्धाध्याहारः । वदन्ति मञ्चाः क्रोशन्तीति प्रयोगदर्शनादाधाराधेययोरभेदोपचारश्चाविरुद्धलक्षणादिभिः प्रयुज्यमानो न दोषायेति ॥२६७॥ अथालङ्कारसङ्करः । स यद्यपि व्यक्ताव्यक्तोभयारम्भतया तिलतण्डुलकादिभेदैः प्रधानाङ्गभावसमकक्षताभ्यामपुरस्तादुक्तः । तथापि तेषां गुणादिसङ्करासाधारणत्वात् सम्प्रति साधारणः प्रकार उच्यते । स षोढा शब्दालङ्कारसंकरो,ऽर्थालङ्कारसंकर, उभयलंकारसंकरः, शब्दार्थालंकारसंकरः, शब्दोभयालंकारसंकरो,ऽर्थोभयालंकारसंकर इति । तेषु शब्दालंकारसंकरो यथा । हंसालीभयालरलासारासरसासरासरासरासा । अम्बररमारूढासारासरसासरासुसारसरासा । अत्र संस्कृतप्राकृतभाषाश्लेषो गतप्रत्यागतचित्रं, पादावृत्तियमकं, वर्णानुप्रासश्चेति चत्वारः ॥ २६८ ॥ शब्दालङ्कारसंकरो यथा । वासात्रस्थितताम्रचूडवयसामायामिभिः कूजितैर्दूरादप्यनुमीयमानवसतिर्ग्रामोयमन्तर्वणः । यत्रोद्वीपसमुपालभकूटविसरद्रम्यान्यनं घूर्णतेव



१ मुकुलकपाठमिसरदिति पुस्तकान्तरे

न्ध्यान्तोल्लसदच्छभल्लपटलच्छायाजटालं तमः । अत्र ताम्रचूडत्रयसांकूजितैरित्यनुमानं, यत्तमो घूर्णत इति ज्ञापकहेतुरुद्दीप्तसृगाल १ कण्ठत्रिसरद्दूरयान्धनमिति संध्यान्तोल्लसदच्छभल्लपटलच्छायाजटालमिति चकारकहेतुर्जायमानपदार्थस्वरूपाभिधानज्ञातिरित्यर्थालंकाराश्चत्वारो मिथः संकीर्यन्ते ॥ २६९ ॥ उभयालंकारसंकरो यथा । णहुणवरन्दीवसिहासारिच्छछुरूपएहिं पडिवस्सम् । कज्जलकज्जलिमकअं उअरि भमन्तेहिं भमरेहिम् ॥ अत्र चम्पकादीनां प्रदीपशिखाभिराकारकान्तिमुपमाविरहिणीहृदयदाहोद्गमद्योतनार्थक्रियाभ्यां साम्यं कज्जलपटलानामिवोपरि भ्रमरपटलानां मेलनान्मीलितं रूपकदीपककलिकयोरिव भ्रमरकज्जलपटलयोरौपम्यादिसम्बन्धात् समुच्चय इत्युभयालंकाराश्चत्वारो मिथः संकीर्यन्ते ॥२७०॥ शब्दार्थालंकारसंकरो यथा । सर्वाशारुधि दग्धवीरुधि सदासारङ्गबद्धक्रुधि क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि । शुष्यत्स्रोतसि तप्तभूमिरजसि ज्वालायमानाम्भसि ज्येष्ठे मासि खरार्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥ अत्रावन्तिकारातिः पदमुद्राविभक्तिमुद्रा अनुप्रासश्चेति शब्दालङ्कारा जातिर्ज्ञापककारकहेतू चित्रहेतुश्चेति अर्थालङ्कारा मिथः सङ्कीर्यन्ते ॥२७१॥ एवमुभयालंकारसङ्करो यथा । स्तोकं स्तोकममूभिरम्बरतलेतारभिरस्तङ्गतङ्गच्छत्यस्तगिरेः शिरस्तदनुच छायादरिद्रः शशी । प्रत्यासन्नतरोदयस्य तरणेर्बिम्बारुणिम्ना ततो मञ्जिष्ठारसलो-



१ उड्डीनकुक्कुटकण्ठेति पुस्तकान्तरे

हिनीदिगपिचप्राचीसमुन्मीलति ॥ अत्रसमुन्मीलतीति विभक्तिमुद्रास्तोकंस्तोकमस्तंगतंगच्छतीत्यादिरनुप्रास-श्चशब्दालङ्कारा हेतूपमासमाधिरनुक्रमः समुच्चयोक्ति श्चेतिउभयालङ्कारामिथः सङ्कीर्यन्ते ॥२७२॥ अर्थोभयाल कारसंकरोयथा। स्वंवक्ति कलविङ्ककण्ठमलिनंकादम्बि नीकम्बलंचर्चापारयतीवदर्दुरकुलंकोलाहलैरुन्मदम्। गन्धम्मुञ्चतिसिक्तजालसुरभिंवर्षेणदग्धास्थलीदुर्लक्ष्यो-पिविभाव्यतेकमलिनीहासेनभासाम्पतिः ॥ अत्रजातिर नुमानंकारकज्ञापकहेतूचेत्यर्थालंकारा, रूपकोपमाहे-तूपमोत्प्रेक्षोपमाचेतिउभयालंकारा मिथःसंकीर्यन्ते। ए तेनगुणालंकारसंकरोपिव्याख्यातः। अतोयद्यपिगुणव त्येववाक्येसंकरयोगस्तथापिक्वचिद्गुणस्यप्राधान्यंक्वचिद लंकारस्येतिप्रधानाङ्गभावेनगुणालंकारयोःसंकरव्यवहा रःप्रवर्त्तते ॥२७३॥ सषोढा। शब्दगुणप्रधानो,ऽर्थगुणप्रधा नो, दोषालंकारप्रधानः, शब्दालंकारप्रधानो,ऽर्थालंकार प्रधान,उभयालंकारप्रधानश्चेति। तेषुशब्दगुणप्रधानो यथा। प्राप्तश्रीरेषकस्मात्पुनरपिमयितम्मन्थखेदंविद ध्यान्निद्रामप्यस्यपूर्वामनलसमनसोनाप्यहंतर्कयामि। सेतुंबध्नातिभूयः किमितिचसकलद्वीपनाथानुयातस्त्व-य्यायातेवितर्कानितिविदधतिइवाभातिकम्पः पयोधेः ॥ अत्रहेतूत्प्रेक्षाभिधानेत्वयीत्यादौपदेविष्णोः स्वरूपा-ध्यासेनतद्भावापत्तौसमाधेः प्राधान्यमिहप्रतीयते। ननु चायमर्थस्यप्राकट्यात्प्रसादोर्थगुणः कस्मान्नभवति। अ

स्मिन्नपि तद्व्यपदेशेन शब्दशक्तेराधिक्यात् । ननु चरत्वय्यी
त्येष इत्यस्येति युष्मन्हेतदिदमदः कश्चिन्नविष्णुवाची
सकथं वर्णनीये वस्तुनि तमर्थमभिदध्यात् । उच्यते । सर्व
नामत्वेनैषां सर्ववाचित्वात् सर्वनामानि हि सर्वाभिधायी
न्यपि प्रकरणादिगम्यं विशेषमर्थं ब्रुवते । स चेह प्राप्त
श्रीरित्येवमादिभिरतिव्यक्तमेवाभिगम्यत इति ॥२७४॥
अर्थगुणप्रधानो यथा । लक्ष्मीवशीकरणचूर्णसहोदरा-
णि त्वत्पादपङ्कजरजांसि चिरं जयन्ति । यानि प्रणाममि-
लितानि नृणां ललाटे लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥
अत्र हेतुवाक्यउभयालंकारप्राधान्येनार्थप्रकटमर्थगुणः
प्रतीयते ॥ २७५॥ दोषगुणप्रधानो यथा । येनापवि
द्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्-
थे । व्यावर्त्तनैरहिपतेरयमाहिताङ्कः खं व्यालिखन्नि
व विभाति स मन्दराद्रिः ॥ अत्र व्यावर्त्तनैरहिपतेरयमा-
हिताङ्क इति ज्ञापकहेतोः खं व्यालिखन्निवेत्युत्प्रेक्षावय-
वाच्च देवासुरैरिति नित्यवैराविवक्षायां बहुवचनम् । अ
मृतमम्बुनिधिर्ममन्थ इति द्विकर्मकेष्वपि मथिप्रभृतीना-
मुपसङ्ख्यानमित्यमृतशब्दाद्द्वितीयेति दोषगुणयोः प्रा
धान्यं प्रतीयते । ननु चात्राप्यर्थस्य प्राधान्यं न भवतीति
द्विषयस्य ज्ञापकहेतुनापहृतत्वात् । सोऽप्यर्थालंकार एव ।
गुणालंकारयोश्च तुल्यकक्षतायामलंकारः प्रधानं भवति-
न गुणः । गुणैर्हि गुणभूतैरेवालंकारा प्रायश्चारभ्यन्ते ।
तद्यथा । अ[illegible] समग्रगुणगुम्फिता ।

विपञ्चीस्वरसौभाग्या वैदर्भीरीतिरिष्यते ॥ समस्तोत्युत्कटपदामोजःकान्तिसमन्विताम् । गौडीयां तां विजानन्ति रीतिं रीतिविचक्षणाः ॥ अश्लिष्टश्लथभावां च पुराणच्छायमाश्रिताम् । मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥ माधुर्यमपि वाञ्छन्तः प्रसादं च सुमेधसः । समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥ लाटीया वन्त्ययोरीत्योर्मध्यं क्वचित्क्वचित् । केचिदोजोभिधित्सन्तः समस्यन्ति बहून्यपि ॥ प्रतीतशब्दं ह्योजस्वी सुश्लिष्टपदसन्धिता ॥ प्रसादिस्वभिधानं चायमलंकृतिनां मतमिति ॥ माभूदलंकारतुल्यकक्षतयार्थस्य प्राधान्यं गुणस्य तु स्वाश्रयविशेषगुणयोगवद्धात्त्वमित्यादेः किमिति प्राधान्यं न भवति । दोषगुणानामतीवोल्लेखविधित्वेन प्रधान्यात् ॥ यथा । स्वावामनप्रसिद्धिर्लङ्घितनभसो बलिद्विषोऽद्यापि । मत्सरिणः खलु लोका मर्माण्येवानुबध्नन्ति ॥ दोषस्य यो गुणीभावः स ततोप्यधिकं प्रकाशत इति ॥ २७६ ॥ शब्दालङ्कारप्रधानो यथा । यच्चन्द्रकोटिकरकोरकभारभाजि बभ्राम बभ्रुणि जटापटले हरस्य । तद्वः पुनातु हिमशैलशिलानिकुञ्जझाङ्कारडम्बरविरावि सुरापगाम्भः ॥ अत्रार्थप्राकट्यं प्रसादो, विभवोत्कर्ष उदात्तता, मृदुप्रस्फुटोन्मिश्रवर्णानामवैषम्यं समता, बन्धगाढतौजित्यमित्यादिभ्यो गुणेभ्यः प्राधान्येन शब्दालंकारानुप्रासः प्रतीयते ॥ २७७ ॥ अर्थालंकारप्रधानो यथा । आश्लेषिणः पृथुरतक्लमपीतशीतमायामिनीघनमुदो रजनी-

र्युवानः । ऊर्वीमूर्ध्नि द्रुम्बंधनबन्धनसन्धिलोलपादान्त-संवलितलोलपटाः स्वपन्ति ॥ अत्रबन्धविकटत्वमुदारता, श्लाघ्यविशेषणयोग उदात्तता, विभवोत्कर्षऔदार्यं, दीप्तरसत्वं कान्तिरित्यादिभ्योगुणेभ्यः प्राधान्येनजातिरर्थालंकारः प्रतीयते ॥२७८॥ उभयालङ्कारप्रधानोयथा । अभ्युद्धृतावसुमतीदलितारिपूरः क्षिप्रक्रमं कवलितावलिराजलक्ष्मीः । अत्रैकजन्मनिकृतंयदनेन यूनाजन्मत्रयेसदकरोत्पुरुषः पुराणः ॥ अत्रोक्तिपरिपाकः प्रौढि,बन्धविकटत्वमुदारता, आशयोत्कर्षउदात्तत्वम् , अर्थप्राकट्यम्प्रसाद इत्यादिभ्योगुणेभ्यः श्लेषोपसर्जनाविशेषोक्तिरुभयालंकारः प्राधान्येनप्रतीयते ॥ २७९ ॥ रससंकरोपिचालंकारसंकरवदेवरसाभासप्रशमानान्तिलतण्डुलादि प्रकारेणसंकरः षट्प्रकारोभवति । तत्रभावानान्तिलतण्डुलप्रकारोयथा । न्यक्कारोहृदिवज्रकीलइवमेतीव्रः परिस्पन्दतेघोरान्धेतमसीवमज्जतिमनः सम्मीलितंलज्जया । शोकस्ताक्ष्यविपत्तितोदहतियत्सारथ्येनयस्मिन्क्रियामर्माण्ये वपुनश्छिनत्ति करुणासीतांवराकींप्रति ॥ अत्रामर्षलज्जाशोकानुकम्पाः समकक्षतयामिथस्तिलतण्डुलवत्संकीर्यमाणारामस्यविरहिणो वागारम्भानुरागोक्तिपरतयाप्रतीयन्ते ॥ २८० ॥ क्षीरनीरप्रकारोयथा । मामोन्नतेत्यसहनेत्यऽतिपण्डितेति मय्येवधिक्कृतिरनेकमुखीसखीनाम् । दाक्षिण्यमात्रमसृणनावचोष्टितेनधूर्त्तस्यतस्यतु

गुणानुपरञ्जयन्ति ॥ अत्रसखीषुरोषः प्रियगुणेषु चासू-
याक्षीरनीरवन्मिथः संकीर्यमाणौ मानिनीव्यापारस्या-
परतयाप्रतीयेते ॥ २८१ ॥ छायादर्शप्रकारोयथा ।
आःसीतापतिगर्वविभ्रमभरप्रान्तभ्रमद्बान्धवप्रध्वंसस्मि
तकान्तिमत्तवतदाजातंयदेतन्मुखम् । सम्प्रत्येवहठा
त्तदेवकुटिलकेशीच्छयोत्कर्षणत्रासोत्तानितलोललोचनप
तद्बाष्पप्लुतंरावणः ॥ अत्रक्रोधाभासेछायादर्शत्वा
येनरत्याभासः संकीर्यते ॥ २८२ ॥ नरसिंहवद्यथा ।
किंद्वारिदैवहतिकेसहकारकेणसंवर्द्धितेन विषपादपए
षपापः । अस्मिन्मनागपिविकासविकारभाजिभीमाभ
वन्तिमदनज्वरसन्निपाताः ॥ अत्रनरसिंहजाताविवसिं
हनरशरीरभागारम्भानुसारेण सखीविषयानुकम्पासह
कारविषयाचकुत्सामिथःसङ्कीर्येते । तथाहि । दैवहतिके
शब्देनलब्धायांनियत्युपाधौसर्वथैवानुकम्प्यमानतायां
सहकारसंवर्द्धननिबन्धनत्वमेवास्याः कमाक्षिप्यते । एवं
नामत्वन्दैवोपहतासियत्सहकार विषपादपंद्वारिसंवर्द्ध
वसिविषपादपशब्देनलब्धायांसहकारस्यसर्वथैवकुत्सा
यांविकासकाङ्क्षाकामिनीनामवश्यंस्मरज्वरसन्निपातहेतु
कत्वमेवास्याः कन्प्रत्ययेनप्रत्याय्यते । तदुक्तं "कुत्सितत्वे
नकुत्सायामन्यगश्चापिहिकुत्सितः । स्वशब्दाभिहितेकेन
विशिष्टोर्थःप्रतीयते ॥ नचसाम्प्रतिकीकुत्साशब्दाभेदेप्र
तीयते । पूज्यतेकुत्सितत्वेपिप्रशस्तत्वेपिकुत्स्यते,, इति ।
तद्यथा । एकङ्कहजीवलोकेजीवतिरूप ।घः

प्रेममात्रपाशंमृगइवनमृगीदृशांपतति ॥२८३॥ पांसूदकप्रकारोयथा। मागर्वमुद्वहकपोलतलेचकास्तिकान्तस्वहस्तलिखितामममञ्जरीति। अन्यापिकिंनसखिभाजनमीदृशीनांवैरीनचेद्भवति वेपथुरन्तरायः ॥ अत्रस्वसौभाग्यवर्णनामृत्पिण्डेपांसूदकयोरिवाविभागमापाद्यमानयोरसूयागर्वयोः सङ्करउपपद्यते ॥ २८४॥ चित्रवर्णप्रकारोयथा। विरोधोविश्रान्तः प्रसरतिरसोनिर्वृतिघनस्तदौद्धत्यंक्वापिव्रजतिविनयः प्रह्वयतिमाम। झटित्यस्मिन्दृष्टेकिमपिपरवानस्मियदिवामहार्घस्तीर्थानांकिमिहमहताङ्कोप्यतिशयः॥ अत्रवीरौद्धत्यस्यातन्द्ररसानामानन्दप्रशमपारवश्यरसैस्तिरस्क्रियमाणानाम्पट्टवर्णनीलादिभिः सितादीनामप्रथमादामदर्शनप्रभावोद्भवबलवस्यविस्मयातिशयप्रथमजन्मनिवाऽगारम्भानुभावोपमाद्भवेदतश्चित्रवर्णवत्सङ्कीर्यमाणाःसमुपलभ्यन्ते॥ २८५॥ अथकोयंगुणसङ्करः। ननुचदोषहानमिव[1] गुणोपादानमपिनियमनिवर्त्यम्। अलङ्कारयोगइवरसाभियोगोप्यवश्यंविधेयः। कदाचिदलङ्कारयोगोपित्यज्यते। नतुरसा[2]द्व्यभिचरितसम्बन्धाविति। अत्रोच्यते। यत्रचित्रवर्णवन्नरसिंहवत्पांसूदकवदवयवात्ववविन्यायेनजातिव्यक्तिन्यायेनवापृथक्प्रयत्नानिवर्त्यानाङ्गुणरसानां साङ्ख्ये सन्निवेशस्तत्रसङ्करव्यवहारोनप्रवर्त्तते । तद्यथा । मधुरंरसवद्वाचिवस्तुन्यपिरसस्थितिः। येनमाद्यन्तिधीमन्तोमधुनेवमधुव्रताः ॥ कामंसर्वोप्यलङ्कारोरसमर्थेनिषि



१ रसावियोगोगुणइति २ पुस्तके। २ रसावियोगोगुणयोः चेति २ पुस्तके ।

च्चति । तथाप्यग्राम्यतैवैनम्भारंवहतिभूयसा ॥ शृङ्गारएवसर्वेषुपरमह्लादनोरसः । तन्मयत्वात्प्रसाम्नीरचना माधुर्यम्प्रतितिष्ठति ॥ शृङ्गारेविप्रलम्भाख्येकरुणेचप्रकर्षवत् । माधुर्यमार्द्रतांयातियतस्तत्राधिकम्मनः ॥ रौद्रादयोरसादीप्त्यालक्ष्यन्तेकाव्यवर्तिनः । तद्व्यक्तिहेतुशब्दार्थावोजोधिष्ठायतिष्ठति ॥ समर्पकत्वंकाव्यस्ययत्तुसर्वरसान्प्रति । सप्रसादोगुणोज्ञेयः सर्वसाधारणक्रियः ॥ सेयंगुणानांरसारम्भकत्वेसंकराप्रसिद्धिः । एवंरसानांगुणारम्भकत्वेपि । तद्यथा।रूढाहंकारतौर्जित्यंमात्रतोवाकप्रवृत्तिर्भाविकत्वं क्रोधादावव्यस्यतीव्रत्वंमाधुर्यमाशयोत्कर्षउदात्तमतवर्थस्याभीष्टतमताप्रेयोदीप्तरसत्वंकान्तिरिति । यत्रतुतिलतण्डुलवत्क्षीरनीरवच्चापादृश्यतत्तुल्यकक्षतयैवगुणरसानांवाक्यैःप्रथक्प्रयत्ननिर्वर्त्यामां विनिवेशस्तत्रसङ्करव्यवहारःप्रवर्त्तते एव । सषोढा । गुणप्रधानो, रसप्रधान, उभयप्रधान, उभयाप्रधानो,गुणाधिको,रसाधिकइति । तेषुगुणप्रधानोयथा । अत्रान्तरेललितहारलतानितम्बसंवाहनस्खलितवेगतरङ्गिताङ्गी । देवीव्यपास्यशयनन्धृतमानतन्तुरन्तःपुरंगतवतीसहसीविदग्धैः ॥ अत्रार्थप्रौढत्वौदार्ययोरर्थशब्दगुणयोः प्राधान्यमभवति क्रोधयोरितिगुणप्रधानः ॥ २८६ ॥ रसप्रधानोयथा । अस्मिन्नगृह्यतपिनाकभृतासलीलमारब्धवेपथुरधीरविलोचनायाः । विन्यस्तमङ्गलमहौषधिरीश्वरायाः स्रस्तोरगप्रतिसरेणक

रेवपाणिः ॥ अत्रस्त्राद्यविशेषणयोगउदात्तत्वं बन्ध
विकटत्वमुदारता अर्थप्राकट्यम्प्रसादो दीप्तरसत्वङ्का
न्तिरितिगुणाः साध्वसविलासानुरागसंगमरसैरतिश्च
व्यन्तइतिरसप्रधानः ॥२८७॥ उभयप्रधानो यथा । स्ना
घातसात्त्वरसिकेसरश्रीरुहस्यकिञ्जल्कर्पायितुमिच्छसि
वापिकायाम् ॥ कालःकलिर्जगदिदं न कृतज्ञमज्ञैस्थित्वा
हरिष्यतितवैवमुखस्यशोभाम् ॥ अत्रभजितिविशेषउक्तिः
संविधानेसुसूत्रताश्लेषइति शब्दगुणबोलाविलासविला
सवर्णनीयरसयोश्चतुल्यकक्षतयानिर्दिशत्युभयप्रधानः
॥२८८॥ उभयाप्रधानो यथा । अभिनववधूरोषस्वादुःकरी
षतनूनपादसरलजनाक्षेपश्लेषक्रूरस्तुषारसमीरणः ॥
गलितविभवस्याज्ञेवाद्यद्युतिर्मसृणारवेर्विरहिवनिताव
क्त्रक्लैब्यंबिभर्तिनिशाकरः ॥ अत्रस्वादुक्रूरमसृणक्लैब्य
मित्यन्यधर्माणामन्यत्रारोपणं समाधिरभिनववधूरोषा
दीनाञ्चतुर्णामप्यर्थानांस्वाद्वादीनाञ्चलक्षणादिलक्षिता
नाम्प्राकट्यंप्रसादो ऽभिनववधूरोषस्वादुःकरीषतनून
पादितिविशेषणविशेष्याणामुपक्रमेणनिर्वहणंरीतिःपाद
चतुष्टयेचतुर्णामर्थानांविभज्यसमत्वेनविवेशः सम्मितत्व
मितिचत्वारोगुणाः श्चत्वारश्चरत्यमर्षविषादजुगुप्सा
त्मानोरसाः कालावस्थानिवेदनपरत्वेनप्रतीयन्तइत्युभ
याप्रधानः ॥ २८९ ॥ गुणाधिकोयथा । अजननिरस्तु
विभूतेरपूरणिर्भवतुसर्वकामानाम् । मायाचिषिमासीव
विमासहिविपराभवस्यनितः ॥ अत्रपुलिकुमान्तिःसौष

इत्थं आख्यानात्म्परिपूर्णत्वमर्थव्यक्तिरर्थस्यप्राकट्यम्प्र
सादोविभूतरमुत्पत्तौकामानपूर्यन्तेऽपरिपूर्णकामोयाच
तेयाचमानस्तदनामुवन्धनिलः सेवन्तंसेवमानास्तुतेः प
रिभूयनेइत्युत्पत्त्यादिक्रियाक्रमोरीतिरितिगुणाश्चत्वारः।
रसस्तुनिर्वेदएवैकइतिगुणाधिकः ॥ २९० ॥ रसाधिको
यथा। कमलमनम्भसिकमलेचकुवलयेतानिकनकलति
कायाम्। साचसुकुमार सुभगेत्युत्पातपरंपराकेयम् ॥
अत्रकमलमनम्भसि कमले च कुवलयेतानिकनकलति
कायामित्यन्यधर्माणामन्यत्रारोपणंसमाधिः साचसुकु
मारसुभगेत्युत्पातपरम्पराकेयमित्यश्लीलामङ्गलार्थौ दो
षगुणावपि श्लाघ्यविशेषणगुणयोगउदात्तत्वंविकटत्व
न्त्वत्वमुदारतोपक्रमभेदोरीतिरर्थस्यप्राकट्यम्प्रसादोऽनि
ष्ठुरतासौकुमार्यमाभीष्टतमतामेयो दीप्तरसत्वङ्कान्ति
रितिगुणादश। रसास्तुरत्युत्कर्षहर्षस्मृत्युत्कण्ठावेगवि-
स्मयमतिवितर्कचिन्ताचपलताहासोत्साहस्तम्भगद्गदो-
न्मादव्रीडाऽवहित्थाभयशङ्काविंशतिर्व्यभिचारम्भानुभवेश्च
ङ्गारिणः प्रियाचाटुकारस्यकस्यचित्प्रतीयन्तइतिरसा
धिकः ॥ २९१ ॥ रसालङ्कारसङ्करोप्येतेनव्याख्या
तः। रसवन्तिहियवस्तूनि सालङ्काराणिकानिचित्।
एकेनैवप्रयत्नेनविवर्त्यन्तेमहाकवेः ॥ रसाक्षिप्तत-
यायस्यबन्धः शक्यक्रियोभवेत्। अपृथग्यत्ननिर्वर्त्यः
सोलङ्कारः प्रहृष्यते ॥ रसभावादिविषयविवक्षाविरहे
सति। अलङ्कारनिबन्धोयः सकविभ्योनरोचते ॥ तत्र

सालंकाररसंकरोद्विधा । रसप्रधानोलंकारप्रधानश्च । त
योर्येनुभवित्रैत्रवर्ण्यतेसरसप्रधानः । तत्रह्यलंकारवती
वाक्यस्यश्रागारम्भानुभावत्वंभवति । तत्ररतावुपमाद्याः
संकरोयथा । तीएदंसणसुहएपणअएवलणजणिओमुह
म्मिमगहरे । रोसोविहरइहिंअअम्मअंअम्पङ्कोव्वमअ-
तद्धलस्सिनिसस्स । अत्रोपमातिरस्कारेणरसवतोहरेर्व-
चसिश्रागारम्भरूपेरुक्मिणीप्रदत्तपारिजातमञ्जरीविलो
कनप्रभवसत्यभामायारोषरमणीयकम्प्राधान्यतः प्रती
यते ॥ २९२ ॥ रतावेवविपरीतोपमायथा । यत्त्वन्ने
त्रसमानकान्ति सलिलेमग्नंतदिन्दीवरम्मेघैरन्तरितः
प्रियेतवमुखच्छायानुकारी शशी । येपित्वद्गमनानुका
रिगतयस्तेराजहंसागतास्त्वत्सादृश्यविनोदमात्रमपिमे
दैवेननक्षम्यते ॥ अत्रविरहिणोरामस्यप्रियावयवसा
दृश्यदर्शनेनात्मानंविनोदयत उपायभ्रंशारतिप्रभविषा
दश्रागारम्भेस्वरूपाभिधानोपक्षीणशक्तिरप्राधान्येनो-
पमाप्रतीयते ॥ २९३ ॥ रतावेवविपर्ययोयथा । किङ्कुरु-
अहणभरोतिभावअक्करअलग्गतुलिआए । विहिणोख-
त्तङ्गुलियगाविम्मअमवंहइसतिवली ॥ अत्रपद्मपिरतिप्रभ
वेभ्योविस्मयादिभ्यः संशयहेतूत्प्रेक्षोपमाभ्यश्चपर्याया
लंकारः प्राधान्येनप्रतीयते । तथाप्यसौश्रागारम्भानुभा
वइतिरतावप्यप्राधान्यमेवानुभवति ॥ ९४ ॥ रतावेवस
माधिर्यथा कृच्छ्रादूरुयुगंव्यतीत्यसुचिरंभ्रान्त्वानित
म्बस्थलेमध्येस्याख्रिवलीतरङ्गविषमेनिष्पन्दतामागता ।

मद्दृष्टिस्त्वपितेव सम्प्रतिशनैरारुह्यतुङ्गौस्तनौसाकाङ्क्षम्मुहुरीक्षतेजलभरप्रस्यन्दिनीलोचनं ॥ अत्रवत्सराजेनस्वद्दृष्टौप्रागिधर्माः समाधीयमानाः सागरिकादर्शनार्थेव्यागारम्भेन्यग्भवन्ति ॥ २९५ ॥ एतावेवार्थ श्लेषेयथा ॥ कपोलेपत्त्रालीकरतलनिरोधेनमृदिता निपीतोनिश्वासैरयममृतहृद्योधररसः । मुहुर्लग्नः कण्ठेतरलयतिवाष्पस्तनतटीप्रियोमन्युर्जातस्तवनिरनुरोधेनतुवयम् ॥ अत्रयद्यप्याक्षेपेणवाक्योपसंहारस्तथापिप्रियइत्यादिभिः प्रधान्येनाभिधीयमानः श्लेषएवशृङ्गारिणोव्यागाररसानुभावाङ्गत्वमङ्गीकरोति ॥ २९६ ॥ एतावत्रपर्यायोक्तेर्यथा। मुक्ताः कन्धरयावृताः स्तनतटेनोत्तुङ्गता कुम्भयोरूरुभ्याक्रपरिणाहिताक्रमवती हस्तस्यपद्रुभ्याङ्गतिः। एतद्वः करिघालिवस्तुकठिनञ्चर्मैव कोयंहठश्चण्डीति त्रिपुरारिकेलिवचनैरार्यान्वितम्पातु वः ॥ अत्राग्रवसञ्चाटूक्तिव्यागारम्भेदव्याः पर्यायवर्णनाश्लेषभावंलभते ॥ २९७ ॥ यत्रउदासीनेनवर्ण्यतेसोलङ्कारप्रधानः । सहिरसभावादेः सङ्करप्रकारमभिधित्सुः स्वभावोक्तिं वक्रोक्तिंवावलम्बते । तत्रस्वभावोक्तिपक्षेजातिः । साविधिमुखेनयथा । थोओउसरतरोसस्त्रौअपरिवट्टमानपहरिसम् । होइअदरपआसंउहअरसाश्रुतस्मिभमन्तीअमुहम् ॥ अत्र सत्यभामायारोषस्यापसर्पतः प्रहर्षस्य च प्रसर्पतो येऽनुभावाजिह्मावलोकनमुखप्रसादादयस्त इह सकीर्यमाणाः कविनोभय

रसाश्रयत्वमिभ्रूममित्यनेन यथावदवस्थिता भवन्तीति
विधिमुखेनाभिधीयन्ते ॥ २९८ ॥ जातिरेव निषेधमुखे
न यथा । धीरेणमानभङ्गोमाणक्खलणेन गुरुअधीरार
म्भो । उल्ललइतुलिजँतेएकम्मिवि सेथिरन्नलग्गइहिअअ
म् ॥ अत्र यद्यपि हेतूपन्यासो वर्त्तते तथापि तस्य
स्वभावाख्यानपरिकरत्वेनाप्राधान्येन हृदयक्रियास्वरू
पमेवहिनिषेधमुखेनाभिधीयते इतीयज्जातिरेव भवति
॥ २९९ ॥ सैवविधिनिषेधाभ्यां यथा । हेलोद्धृतमही
धरस्य तनुतामालोक्य दोष्णोहरेर्हस्तेनास तदागलस्तय
चरणावारोप्यतत्पादयोः । शैलोद्धारसहायतामुपगमि
घोरस्पृष्टगोवर्द्धना राधायाः सुचिरञ्जयन्तिगगने वह्न्यः
करभ्रान्तयः ॥ अत्र राधाया मनसि हरौ यथावदवस्थि
ताद्भुतवृत्तिस्नेहशङ्कोत्साहा मिथः संकीर्यमाणाभया
वेगस्मृतिमतिवितर्कादिभिर्व्यभिचारिभावैरालम्बनचर-
णाक्रमणसहकृतायांकरभ्रान्ती शरीरारम्भानुभावेपूती
यमाना अस्पृष्टगोवर्द्धनावन्ध्या इतिनिषेधमुखेनजयन्ती
तिविधिमुखेनचाभिधीयन्ते ॥ ३०० ॥ वक्रोक्तिपक्षउप
मादय तेषुउपमायथा । चोराणअसतहणम्पुणो पसअ
यतिद्दिव्वीओ । अहिरत्थिअनिहिकलसेथयोक्कहम्पूइ
खणुत्तङ्के । अत्रचौरगतभयानुरागयोः संकरस्वभावो
क्तिमभिभूयोत्तरार्द्धोगतमौपम्यमप्राधान्येनप्रतीयते ॥ ३०१ ॥
उपमैवरसाभाससंकरविषयायथा । एकेनार्कप्र
विततरुषापाटलेनास्तसंस्थांपश्यत्येकमुदयगसजलतरलेना

परेणात्मकान्तम् । अहृनश्छेदे दयितविरहाशङ्किनी चक्रवाकी द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ अत्र निगदेनैव व्याख्यायते स्पष्टतयैवोपमायाः प्रधानत्वेन प्रतीतिः ॥ ३०२ ॥ रसप्रशमयोरुपमासहोक्तिर्यथा । दृष्टे लोचनवन्मनाङ्मुकुलितम्पार्श्वे स्थितेवक्त्रवन्नम्रीभूतम्बहिरासितम्पुलकवत्स्पर्शं समातन्वति । नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो मानेनापगतं ह्रियेव सुतनोरङ्घ्रिस्पृशि प्रेयसि ॥ अत्र कस्याश्चित्सखीविख्यातमानसंविधानकोपान्मानवत्याः प्रियसन्दर्शनादालम्बनविभावादुत्पन्नप्रकृष्टरतिप्रभवहर्षस्थायिभावे तत्पार्श्वेऽपि समर्पणादिभिरुद्दीपनविभावैरुद्दीप्य १ मानेषु पुलकादिषु समुत्पद्यमानेषु व्यभिचारिषु नयननिमीलनाधोमुखनीवीविस्रंसनादिभिरनुभावैः प्रकर्षारोपणादानन्दरसतामापाद्यमाने स्थायिनि प्रबलविरोधिभावान्तरोदयादेतेभ्य एव कारणेभ्यः प्रतिक्षणमपचीयमानयोर्लज्जारोषयोः प्रशमसङ्करावभिभूय प्राधान्येनोपमासहोक्तिः संकीर्यते २ ॥ ३०३ ॥ श्लेषाद्यलङ्कारसंकरात्तु ३ क्वचिदवास्तवमपि रसाभाससंकरं कवयो वर्णयन्ति ॥ सरूपकश्लेषेण यथा । राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी । गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ अत्र बीभत्सो रसः श्लेषरूपकसामर्थ्याद्विद्यमानेनापि शृङ्गाररसेन संकीर्ण इव प्रतीयते ॥ ३०४ ॥ श्लेषानुविद्धार्थान्तरन्यासेन यथा । दठ्ठोठ्ठहीप्रसिल

वाअव्वाओदे्व्रिमउलावइलोअणभउन्तोवेवि । सुपओहरकुवलअपत्तिलच्छिक्कहमोनुभाइणगाजणवच्छि ॥ अत्रवीरोरसः श्लेषसामर्थ्यादविद्यमानेनापिविप्रलम्भशृङ्गारेणसंकीर्यते ॥३०५॥ श्लेषोपमायथा। क्षिप्तोहस्तावलग्नः प्रसभमभिहतो ऽप्याददानोंशुकान्तं गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण । आलिङ्गन्योऽवधूनस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितंशाम्भवो वः शराग्निः ॥ अत्रकरुणोरसः श्लेषोपमासामर्थ्येनाविद्यमानेनापि विप्रलम्भशृङ्गारेणसंकीर्यते ॥ ३०६ ॥ श्लेषव्यतिरेकेणयथा । पद्भ्यामूरुयुगंविभज्यभुजयोर्मध्यन्निपीड्योरसा पार्श्वेषुप्रसभंप्रहृत्यनखरैर्दन्तैर्विलूयाधरम् । सुप्तानप्यवबोध्य युष्मदहितान्भूयोपिभुङ्क्ते वने किं कान्ता सुरतैषिणीनहिनहिव्याघ्रीकरालानना ॥ इहश्लेषसामर्थ्यादपारमार्थिकीशृङ्गारप्रतीतिःपारमार्थिकेनबीभत्सरसेनव्यावर्त्तमानातद्धर्मिणाम्मिथःसंसर्गवद्बुद्धिमुत्पादयति ॥३०७॥ श्लेषरूपेणयथा । अन्त्रैः कल्पितमङ्गलप्रतिसराःस्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतःपिनह्यसहसाहृत्पुण्डरीकस्रजः । एताः शोणितपङ्ककुङ्कुमजुषः सम्भूयकान्तैः पिबन्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ अत्रबीभत्सोरसः शब्दसामर्थ्यादाक्षिप्तेन शृङ्गाराभासेनसङ्कीर्यते ॥३०८॥ समाधिरूपकेणयथा। शिखण्डेखण्डेदुःशशिदिनकरौकर्णयुगलेगलेताराक्ता-



१. र्थ्यादिति २ पुस्तके

राम्भलमुडुपचक्रञ्चकुचयोः। तडित्काञ्चीसन्ध्यासिचय रुचयः कालि तदयन्तवाकल्पः कल्पव्यपरमविधेयो विजयते ॥ अत्र भयानको रसः समाधिरूपकाद्युपकल्पिताकल्परामणीयकाक्षिप्तेन शृङ्गाराभासेन संकीर्यमाणः श्रोतुः प्रेयोरसाङ्गतां गच्छन्संगच्छते ॥३०१॥ एवमियमनेकप्रकारा संसृष्टिर्गुणालंकारसंकरप्रभवाऽभिमन्तव्या। तत्रापिप्रधानाङ्गभावेनसमकक्षतयाचव्यक्ताव्यक्तोभयात्मकस्तिलतण्डुलक्षीरजलच्छायादर्शकादयोभेदायथायोगमवगन्तव्याः। तेकिंवक्तव्याः?। नवक्तव्याः। कथमनुक्ताणम्यन्ते?। उक्तेष्वेवान्तर्भावात्। तद्यथाऽर्थाभयालंकाराभिधाने"खंवस्त" इति"चर्चाम्पारयती"तिविभक्तिमुद्रा,कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलमितिपदमुद्राचशब्दालङ्कारावपिसङ्कीर्यमाणौप्रतीयेते॥ एवमन्यत्रापि। अङ्गाङ्गिभावावस्थानंसर्वेषांसमकक्षता। इत्यलङ्कारसंसृष्टेर्लक्षणीयाद्वयीगतिः॥२०७। तत्राङ्गाङ्गिभावेनावस्थानंयथा। आक्षिपन्त्यरविन्दानि मुग्धेतवमुखश्रियम्। कोषदण्डसमग्राणिकिमेषामस्तिदुष्करम्॥ अत्रारविन्दानिमुग्धेतवमुखश्रियमाक्षिपन्तीत्युपमाकोषदण्डसमग्राणाङ्किमेषामस्तिदुष्करमिति श्लेषोपसर्जनानामर्थान्तरन्यासः। प्रभवन्तिचारविन्दानि कोषदण्डसमग्राणि। तेनकिंतेषान्नकिञ्चिदशक्यमस्तिकोषदण्डयोर्विजयसाधनत्वात्। एतेनश्लेषस्यसाधनभूतार्थसमर्पकत्वादुपमायास्तप्रस्तुतसाध्यवस्तुविशेषकत्वा-

दर्थान्तरन्यासम्प्रत्यङ्गभावो विज्ञायते ॥३१०॥ एवं वास
मकक्षता यथा । लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं न-
भः । असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ननु चा
सम्बन्धः समत्वात् स्यादिति कथं सर्वेषान्तुल्यकक्षतयास
म्बन्धोत्पत्तिः? । एवं मन्यते । यदोत्प्रेक्षोपमादयो लंका-
रा विभावानुभावव्यभिचारिवर्णनापरतया रसादेरङ्ग-
तां प्रतिपद्यन्ते तदा भवन्ति तेषान्तुल्यकक्षतेति । तत्र लि
म्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभ इति द्वे उत्प्रेक्षे । अ-
सत्पुरुषसेवेव दृष्टिर्विफलतां गतेत्युपमा वर्णनीयस्य त
मस उद्दीपनविभावभूतस्य समतयैवोत्कर्षापादकत्वेना
ऽङ्गभावमुपगतेति नास्ति लक्षणानुपपत्तिरिति । ननू-
पमाइमास्ति सोपि कस्मान्नोच्यते? । इवो हि वाक्यान्तरे
षूपमाया एव दृश्यते । नैवम् । उपमानोपमेयशब्दप्रतिप
न्नस्य सादृश्यार्थस्य द्योतनमिवेन क्रियते । न च लिम्पती
त्यादावुपमानमुपमेयं वास्ति । यत्सादृश्यद्योतनायइ-
वः प्रयुज्येत । न च तिङन्तेनोपमानमस्ति । तस्य साध्या
र्थाभिधायित्वेनासत्त्वार्थत्वात् । तदाह "सिद्धस्य हि
समानार्थमुपमानं विधीयते । तिङन्तार्थस्य साध्यत्वा
दुपमार्थो न विद्यते" इति । न चोपमायामेवेवशब्दो भवति
न्यथा । कथमिवैतद्भविष्यति । अस्तु वा लिम्पतितमसो
रुपमानोपमेयभावस्तथापि तुल्यधर्मो न दृश्यते । यच्च
पमानोपमेयभावाय प्रभवति किमन्येन लेपनमेव भवति
लिम्पतिवाक्येनाप्यत्र हि लेपनं लिम्पेः [illegible] वि